श्रीः

श्रीमते निगमान्तमहादेशिकाय नमः
श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी।
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि॥

# ॥ श्रीपराङ्कुशाष्टकम् ॥

*This document* has been prepared by*

***Sunder Kidambi***

*with the blessings of*

श्री रङ्गरामानुज महादेशिकन्

**His Holiness *śrīmad āṇḍavan* of *śrīraṅgam***

*This was typeset using LaTeX and the **skt** font.

श्रीः

श्रीमते रामानुजाय नमः

# ॥ श्रीपराङ्कुशाष्टकम् ॥

त्रैविद्य वृद्ध जन मूर्ध विभूषणं यत्
संपच्च सात्त्विक जनस्य यदेव नित्यम्।
यद्वा शरण्यमशरण्य जनस्य पुण्यं
तत्संश्रयेम वकुळाभरणाङ्घ्रि युग्मम्॥ १ ॥

भक्ति प्रभाव भवदद्भुत भावबन्ध
सन्धुक्षित प्रणयसार रसौघपूर्णः।
वेदार्थरत्न निधिरच्युत दिव्य धाम
जीयात्पराङ्कुश पयोधिरसीम भूमा॥ २ ॥

ऋषिं जुषामहे कृष्ण तृष्णा तत्त्वमिवोदितम्।
सहस्र शाखाम् योऽद्राक्षीत् द्राविडीम् ब्रह्मसंहिताम्॥ ३ ॥

यद्गोसहस्रमपहन्ति तमांसि पुंसां
नारायणो वसति यत्र सशङ्ख चक्रः।
यन्मण्डलं श्रुतिगतं प्रणमन्ति विप्राः
तस्मै नमो वकुळभूषण भास्कराय॥ ४ ॥

पत्युः श्रियः प्रसादेन प्राप्त सार्वज्ञ संपदम्।
प्रपन्न जन कूटस्थं प्रपद्ये श्रीपराङ्कुशम्॥ ५ ॥

शठकोपमुनिं वन्दे शठानाम् बुद्धि दूषणम्।
अज्ञानां ज्ञानजनकं तिन्त्रिणी मूल संश्रयम्॥ ६ ॥

वकुळाभरणं वन्दे जगदाभरणं मुनिम्।
यः श्रुतेरुत्तरं भागं चक्रे द्राविड भाषया॥ ७ ॥

वकुळालङ्कृतं श्रीमच्छठकोप पदद्वयम्।
अस्मत्कुल धनं भोग्यमस्तु मे मूर्ध्नि भूषणम्॥ ९ ॥

नमज्जनस्य चित्तभित्ति भक्ति चित्र तूलिका
भवाहिवीर्य भञ्जने नरेन्द्र मन्त्र यन्त्रणा।
प्रपन्न लोक कैरव प्रसन्न चारु चन्द्रिका
शठारि हस्त मुद्रिका हठात्करोतुमे तमः॥ ८॥

॥ इति श्रीपराङ्कुशाष्टकम् संपूर्णम्॥